# शब्दानां वैचित्र्यम्

☛ जनार्दन हेगडे

संस्कृतभाषायां स्थितः शब्दराशिः तु अपारः । अपारं शब्दराशिं स्त्रष्टुम् अपेक्षिता उत्कृष्टा व्यवस्था अपि अस्ति तत्र । तस्मात् एतस्यां भाषायाम् एतावन्तः एव शब्दाः सन्ति, अनया भाषया एतावन्तः एव शब्दाः निर्मातुं शक्याः इत्यादिकं निष्कृष्टतया वक्तुं कोऽपि न शक्नोति । संस्कृतभाषायाः शब्दसम्पत्तिः अनन्तकोटिमिता इत्येतावत् एव वक्तुं शक्नुयाम वयम् ।

एतस्य शब्दवैशाल्यस्य कारणतः विचित्राः शब्दाः, विलक्षणाः प्रयोगाः चापि अत्र सन्ति अनन्ताः । वैचित्र्यं वस्तुतः न भवति शब्दगतम्, अपि तु भवति द्रष्टृगतम् । यादृशः शब्दार्थः द्रष्ट्रा (श्रोत्रा वा) चिन्त्यते तस्मात् नितरां भिन्नः एव अर्थः तस्य पदस्य यदा दृश्यते तदा द्रष्टा (श्रोता वा) आश्चर्यम् अनुभवन् वैचित्र्यं पश्यति तत्र । तादृशाः केचन शब्दाः प्रयोगाः च वाचकानां विनोदाय निरूप्यन्ते एतस्मिन् लेखे ।

आदौ तावत् सामान्याः (लोके आधिक्येन श्रूयमाणाः) केचन शब्दाः निरूप्यन्ते ।

☛ 'समाजः' अस्माभिः ज्ञायते एव । मानवादीनां समूहः 'समाज'शब्देन उच्यते । किन्तु पशूनां समूहः तु 'समज'शब्देन निर्दिश्यते । तथा हि अमरकोषः - 'पशूनां समजः, अन्येषां समाजः' इति [सूत्रम् - 'समुदोरजः पशुषु' (३.३.६९)]

☛ सभ्य-सभिकयोः अपि भेदः अस्ति । सभायां यः तिष्ठति सः उच्यते 'सभ्यः' इति । 'सभ्यसज्जनसाधवः' इति अमरः । [सू - सभायां यः (४.४.१०५)] ये द्यूतकाराः भवन्ति ते सभिकशब्देन निर्दिश्यन्ते । सभा द्यूतस्थानम् आश्रयत्वेन यस्य स्यात् सः सभिकः । [सू - 'व्रीह्यादिभ्यश्च' (५.२.११६)] तथा हि अमरः - 'सभिकाः द्यूतकारकाः' इति । अतः 'अस्यां सभायां बहवः सभिकाः सन्ति' इति कथनं सभायाः अगौरवाय, भागग्राहिणां निन्दायै च स्यात् ।

☛ एवमेव स्थला-स्थलीशब्दौ । 'स्थला' नाम कृत्रिमा भूमिः । 'स्थली' तु अकृत्रिमा भूमिः । 'जानपद...' (४.१.४२) इति सूत्रेण ङीप् । स्थलं तु भवति उभयसाधारणम् ।

☛ एवमेव ग्रन्थस्य विस्तृतं रूपं 'विस्तर'शब्देन उच्यते । पटादीनां परिणाहः, 'विस्तार'शब्देन निर्दिश्यते । [सू - 'प्रथमे वावशब्दे' (३.३.३३)]

☛ आचार्या नाम सा, या स्वयं व्याख्यात्री भवति । आचार्यस्य पत्नी भवति आचार्यानी । [सू - 'इन्द्रावरण..' (४.१.४९)]

☛ या उपाध्यायस्य पत्नी भवति सा 'उपाध्यायानी' 'उपाध्यायी' वा । [वा

मातुलोपाध्याययोरानुग्वा] या उपाध्यायस्य पत्नी न, किन्तु छात्रान् अध्यापयति सा भवति 'उपाध्यायी'।

☛ अग्निसाक्षिकं यस्याः पाणिः गृह्यते सा भार्या 'पाणिगृहीती' इति उच्यते। विना परिणयं यस्याः पाणिः गृह्यते सा 'पाणिगृहीता' भवति (वा - पाणिगृहीती भार्यायाम्)

☛ यः आलस्येन हस्ततलेन तुन्दस्य (उदरस्य) परिमार्जनं करोति, किमपि कार्यं न करोति, सः उच्यते 'तुन्दपरिमृजः' इति। 'अलसशिखामणिः' इति तात्पर्यम्। यः केनापि अन्येन कारणेन तुन्दं परिमृजति सः 'तुन्दपरिमार्जः' इति उच्यते। अलसः न अयम् इत्यर्थः। 'आलस्यसुखहरणयोरिति वक्तव्यम्' इति वार्तिकम्। 'तुन्दशोकयोः परिमृजापनुदोः'(३.२.५) इति सूत्रेण कः। वार्तिकबलात् आलस्येऽर्थे कः।

☛ चौर्येण पुष्पावचयनं यत् क्रियते सा क्रिया उच्यते - 'हस्तप्रचयः' इति। अचौर्येण पुष्पसङ्ग्रहः यः क्रियते सः 'हस्तप्रचायः' इति उच्यते। [सू - 'हस्तादाने चेरस्तेये' (३.३.४०) अस्तेये घञ् भवति इति तात्पर्यम्। अत्र अयमपि विशेषः - भूमौ स्थित्वा हस्तप्रसारणेन पुष्पसङ्ग्रहे सत्येव 'पुष्पप्रचायः' इति उच्यते। यदि च वृक्षादिकम् आरुह्य, भूमौ एव स्थित्वा यष्ट्यादिना आकृष्य वा सङ्गृह्यते सा क्रिया तु 'पुष्पप्रचयः' एव। (अच् अत्र - 'एरच्' इति सूत्रेण) 'पुरुषः फलानां प्रचायं करोति' इति प्रयोगे 'पुरुषः भूमौ स्थित्वा हस्तप्रसारेण फलं सङ्गृह्णाति' इत्यर्थः। 'पुरुषः फलानां प्रचयं करोति' इति प्रयोगे तु 'भूमौ स्थित्वा यष्ट्यादिना फलानि सङ्गृह्णाति' इति, 'वृक्षम् आरुह्य वा फलानि सङ्गृह्णाति' इति वा अर्थः।

☛ यत्र छायाबाहुल्यं द्योतते तत्र नपुंसकलिङ्गता (तत्पुरुषसमासे) भवति। 'इक्षुच्छायम्' इति उदाहरणम्। इक्षूणां छाया बाहुल्येन यत्र स्यात् तत्रैव अस्य प्रयोगः। बाहुल्याभावे तु नपुंसकलिङ्गता न। 'इक्षुच्छाया' इति अस्य उदाहरणम्। एवमेव अन्यत्रापि। [सू -छायाबाहुल्ये (२.४.२२)]

इतः परं तादृशान् कांश्चन शब्दान् पश्याम, येषां च दर्शनात् तद्वाच्यस्य अर्थस्य अवगमनं कष्टेन एव भवेत्। सामान्यया ऊहया वयम् अर्थान्तरमेव चिन्तितवन्तः स्याम।

१. लालाटिकः - यः सेवकः दूरे स्थित्वा प्रभोः ललाटं पश्यति, न तु कार्ये उपस्थितः भवति सः उच्यते 'लालाटिकः' इति। [सू - 'संज्ञायां ललाटकुक्कुट्यौ पश्यति' (४.४.४६)] तथा हि अमरः - 'लालाटिकः प्रभोर्भालदर्शी कर्माक्षमश्च यः' इति।

२. कौक्कुटिकः - शब्ददर्शनात् भासते यत् कुक्कुट-पालकः, कुक्कुटस्य कार्यादिकं वा अस्य पदस्य अर्थः स्यात् इति। तादृशः अर्थः नास्ति अस्य पदस्य। 'भिक्षुः' इति अस्य पदस्य अर्थः। 'दाम्भिकः' इत्यपि अर्थः अस्ति अस्य। तथा हि अमरः - 'स्याद्दाम्भिककौक्कुटिको यश्चादूरेरितेक्षणः' इति। अत्र कुक्कुटीशब्देन तत्पातार्हः स्वल्पदेशो लक्ष्यते। भिक्षुर्हि क्रिमिकीटादयः पादयोः अधः भवेयुः इति भयात् पादविक्षेपपर्याप्तदेशपर्यन्तमेव चक्षुः संयम्य गच्छति।

३. पारिमुखिकः - 'सेवकः' इति अस्य सामान्यः अर्थः। किन्तु परस्परविरुद्धस्वभावयुतौ सेवकौ अनेन एकेन एव पदेन निर्दिश्यते इति तु विशेषः। 'परि' इत्यस्य वर्जनम्, सर्वतोभावेन स्थितिः इति अर्थद्वयम्। वर्जनार्थकता यदा गृह्यते तदा 'स्वामिनो मुखं वर्जयित्वा यः सेवकः वर्तते सः' इत्यस्य अर्थस्य प्रतीतिः। स्वामिनः मुखं दृष्टं चेत् सः किमपि कार्यम् आदिशेत् इति विचिन्त्य स्वामिनः मुखदर्शनात् आत्मानं यः निवारयति तादृशः सेवकः' इति तात्पर्यम्। यदा च 'सर्वतोभावेन स्थितिः' इति परिशब्दस्य अर्थः तदा 'यतो यतः स्वामिनः मुखं ततस्ततो यो वर्तते सः' इत्यस्य अर्थस्य सिद्धिः। तन्नाम सर्वदा स्वामिनः आदेशस्य पालकः, स्वामिनः अनुयायी इत्यर्थः। एवं च 'स्वामिनः मुखमेव यः निवारयति' इति, 'स्वामिनः आदेशं सर्वदा यः पालयति' इति च अर्थद्वयमपि 'पारिमुखिकः' इति एकस्मात् एव शब्दात् सिद्ध्यति। प्रसङ्गादिकं परिशील्य विवक्षितः अर्थः कः इति अवगन्तव्यं भवति।

४. समांसमीना - अस्य शब्दस्य श्रवणात्, मांस-

मीनादिपदसन्निधानात् च मांसमीनसम्बद्धः कोऽपि पदार्थः एतत्पदवाच्यः स्यात् इति तर्क्येत । अस्य पदस्य अर्थः तु - 'या धेनुः प्रतिवर्षम् अपत्यं प्रसूते सा' इति । तथा हि अमरः - 'समांसमीना सा यैव प्रतिवर्षं प्रसूयते' इति । 'समां समां विजायते' (५.२.१२) इति सूत्रेण खप्रत्ययः । 'समा' नाम वर्षम् । 'संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः' इति अमरः । 'समांसमीना' इत्यत्र 'समा'शब्दस्य वर्षार्थकत्वं जानन् एव योग्यं विग्रह-वाक्यं ज्ञातुं वक्तुं च अर्हेत् । तदनभिज्ञः तु मांस-मीनादिपदानां सत्तां तत्र पश्यन् अर्थविषये दिग्भ्रान्तिं प्राप्नुयात् ।

५. सौखशायनिकः - 'यः सुखेन शयनं करोति' इत्यर्थः एतस्य पदस्य न सर्वथा । 'सुखेन शयनं कृतं किम् ?' इति यः पृच्छति सः उच्यते - 'सौख-शायनिकः' इति । 'पृच्छतौ सुस्नातादिभ्यः' इति वार्तिकबलात् ठक् विधीयते । एतादृशाः अन्ये शब्दाः यथा -

* सौस्नातिकः - 'भवता सुष्ठु स्नातं किम् ?' इति यः पृच्छति सः ।
* सौखरात्रिकः - 'रात्रिः सुखकरी आसीत् किम् ?' इति यः पृच्छति सः ।
* सौखदिवसिकः - 'दिवसः सुखकरः आसीत् किम् ?' इति यः पृच्छति सः ।
* सौखनिद्रिकः - 'निद्रा सुखकरी आसीत् किम् ?' इति यः पृच्छति सः ।

६. हिमेलुः - यः हिमं न सहते सः उच्यते - 'हिमेलुः' इति । 'हिमाच्चेलुः' (वा - ५.२.१२१) इति वार्तिकात् अत्र चेलुप्रत्ययः । हिमेलुः इत्यस्य प्रयोगो यथा - 'अयं हिमेलुः प्रिययोपगूढः उष्णालुतां सम्प्रतिपद्यतेऽत्र' इति । एतादृशाः एव (न सहते इत्यर्थे) शीतालुः, उष्णालुः, वातूलः इत्यादयः अपि शब्दाः ज्ञेयाः ।

७. आयश्शूलिकः - 'अयोमयं शूलं यः धरति' इत्यादयः अर्थाः नास्य पदस्य । 'यो मृदुना उपायेन अन्वेष्टव्यान् अर्थान् तीक्ष्णोपायेन अन्विच्छति सः आयःशूलिकः' इति भाष्यम् । साहसिकाः एतादृश-स्वभाववन्तः भवन्ति । [सू - अयश्शूल-दण्डाजिनाभ्यां ठक्ठञौ(५.२.७६)]

८. दाण्डाजिनिकः - दण्डम् अजिनं च धृतवान् यति इति नार्थः अस्य । दण्डम् अजिनं च दम्भार्थमपि कैश्चित् सेव्यते इत्यतः लक्षणया 'दाम्भिकः' इति अर्थः अस्य पदस्य । सूत्रं पूर्वम् उक्तम् एव ।

९. उष्णकः - उष्णकारी, उष्णभोजी, उष्णप्रियः इत्यादयः अस्य अर्थाः न । उष्णकः नाम शीघ्रकारी । 'यस्तु अनाशुकर्तव्यान् आशु एव करोति सः उष्णकः उच्यते' इति भाष्यम् । [सू - 'शीतोष्णाभ्यां कारिणि' (५.२.७२)]

१०. शीतकः - अयं शब्दोऽपि उष्णकसदृशः एव । शीतकः नाम अलसः । 'यः आशु कर्तव्यान् अर्थान् चिरेण करोति सः शीतक उच्यते' इति भाष्यम् । 'मन्दस्तुन्दपरिमृज आलस्यः शीतकोऽलसोनुष्णः' इति अमरः । सूत्रं तु पूर्वम् उक्तमेव ।

११. पार्श्वकः - पार्श्वे तिष्ठति इत्यादयः अर्थाः नास्य पदस्य । अनुचितेन अनृजुना वा उपायेन यः कार्यं करोति सः पार्श्वकः इति उच्यते । 'ऋजूपायेन अन्वेष्टव्यान् अर्थान् यः अनृजुना उपायेन अन्विच्छति सः पार्श्वकः' इति भाष्यम् । 'कुसृत्या विभवान्वेषी पार्श्वकः सन्धिजीवकः' इति हेमचन्द्रः । [सू - 'पार्श्वेनान्विच्छति' (५.२.७५)]

१२. तन्त्रकः - तन्त्रं करोति, तन्त्रम् अवलम्बते इत्यादयः अर्थाः अस्य पदस्य न । 'नूतनः (सद्यो-निर्मितः) पटः (वस्त्रं) 'तन्त्रक'शब्देन निर्दिश्यते । [सू - 'तन्त्रादचिरापहृते' (५.२.७०)] तन्यन्ते तन्तवोऽस्मिन्निति व्युत्पत्त्या तन्त्रं तन्तुवायशलाका । अचिरकालोपहृतस्य इति अचिरकालापहृतः । 'अनाहतं निष्प्रवाणि तन्त्रकं च नवाम्बरे' इति अमरः ।

१३. ब्राह्मणकः - आपाततः दर्शनात् तु ब्राह्मण-समूहः, ब्राह्मणसम्बन्धी इत्यादिषु कोऽपि अर्थः स्यात् अस्य इति भासते । ब्राह्मणसम्बन्धस्तु न अस्ति अस्य पदस्य । 'आयुधजीविनः ब्राह्मणाः यस्मिन्

देशे स्युः सः देशः 'ब्राह्मणकः' इति उच्यते । [सू - 'ब्राह्मणकोष्णिके संज्ञायाम्' (५.२.७१)]

**१४. परिवेत्ता** - परितः स्थितान् सर्वान् विषयान् यः जानाति सः इति अर्थः न एतस्य । ज्ञानार्थकः 'विद'धातुः अपि नात्र । लाभार्थकः विद्धातुः (विद्लृ - लाभे, तु.उ.अ) अत्र । ज्येष्ठे अनूढे स्थिते अपि पत्नीपरिग्रहं यः कृतवान् सः उच्यते 'परिवेत्ता' इति । तथा हि अमरः - 'परिवेत्तानुजोऽनूढे ज्येष्ठे दारपरिग्रहात्' इति ।

**१५. पात्रेसमितः** - भोजनसमये, भोजनपात्रे निहिते एव यः उपस्थितः भवति, न तु कार्यकाले सः उच्यते 'पात्रेसमितः' इति । [सू - 'पात्रे समितादयश्च' (२.१.४८)]

**१६. खट्वारूढः** - खट्वा नाम मञ्चः । मञ्चे शयानः इति अर्थः न अस्य पदस्य । जाल्मः (असमीक्ष्यकारी) उच्यते अनेन पदेन । तत्त्वबोधिन्याम् अस्य विवरणम् इत्थं दृश्यते - 'वेदं व्रतानि च समाप्य समावृत्तेन हि स्वखट्वा आरोढव्या । ब्रह्मचर्ये एव भूमिशयनार्होऽपि यः खट्वाम् आरोहति सः जाल्मः । रूढश्चायम् । तेन खट्वाम् आरोहतु, मा वा, निषिद्धानुष्ठानपरः सर्वोऽपि खट्वारूढः इति उच्यते ।' विशेषः नाम समस्तेन पदेन यः अर्थः गम्यते (जाल्मः इत्यर्थः) सः विग्रहवाक्येन (खट्वाम् आरूढः इत्यनेन) न गम्यते ।

**१७. पटुपटुः** - पटुतमः, पटुषु पटुः, महापटुः इत्यादयः अर्थाः न अस्य पदस्य । 'ईषत्पटुः' इति तात्पर्यार्थः । 'प्रकारे गुणवचनस्य' (८.१.१२) इति सूत्रेण सादृश्ये द्योत्ये द्वित्वम् । 'पटुसदृशः' इति शब्दार्थः ।

**१८. आत्तगन्धः** - आत्तः नाम गृहीतः । (आ+दा+क्त - दा इत्यस्य तकारः) येन गन्धः गृहीतः, सुगन्धवान् इत्यादयः अर्थाः न अस्य पदस्य । 'आत्तगन्धः'नाम अभिभूतः (तिरस्कृतः) इति अर्थः । गन्धः नाम गर्वः इति अर्थः अत्र । 'गन्धो गन्धक आमोदे समबन्धे लेशगर्वयोः' इति विश्वः । 'आत्तगन्धोऽभिभूतः स्यात्' इति अमरः । (आत्तगर्वोऽभिभूतः स्यात् इति पाठान्तरम्) यस्य गर्वः शत्रुभिः गृहीतः, यस्य गर्वः भग्नः सः उच्यते 'आत्तगन्धः' इति । 'पक्षच्छिदा गोत्रभिदात्तगन्धाः..' इति रघुवंशे (१३.७) प्रयोगः । 'नात्तगन्धमवधूय शत्रुभिः...' इति शिशुपालवधे (१४.८४) प्रयोगः । गन्धयुक्तः इत्यपि अर्थः अस्ति इति अभिप्रैति मल्लिनाथः ।

**१९. सगन्धः** - 'गन्धसहितः' इति अर्थः नास्य पदस्य । 'गन्ध'पदस्य 'सम्बन्धः' इति अर्थः अत्र विवक्षितः । अतः सगन्धः नाम 'सम्बन्धयुक्तः' इति तात्पर्यम् । समानो गन्धो यस्य सः इति विग्रहः । 'सर्वः सगन्धेषु विश्वसिति' इति प्रयोगः शाकुन्तले पञ्चमे अङ्के । 'वामश्चायं नदति मधुरं चातकेन सगन्धः' इति मेघदूते (१.८)

**२०. अजगवम्** - छागः (अजः) गौः इत्यादीनां सम्बन्धः नास्ति अस्य पदस्य । शिवस्य धनुः 'अजगव'शब्देन उच्यते । द्वित्राः व्युत्पत्तयः अस्य दर्शिताः आमरकोषे (सुधाव्याख्याने) तथा हि -

१. अजेन ब्रह्मणा गम्यते - 'अन्येष्वपि दृश्यते' (वा.३.२.४८) इति डः ।

२. अजं छागं गच्छति यज्ञत्वेन प्रविशति इति वा ।

३. अजगो विष्णुः अस्ति शरत्वेन अस्मिन् 'गाण्ड्यभागात् संज्ञायाम्' (५.२.११०) इति वः ।

**२१. लवणङ्कारम्** - 'लवण'शब्दः (क्षारयुक्तद्रव्यविशेषवाच्यः) सर्वैः ज्ञायते एव । लवणस्य निर्माणं योजनं वा नार्थः अत्र । इह लवणशब्दस्य स्वाद्वर्थकता । 'लवणङ्कारं भुङ्क्ते' नाम 'अस्वादुं स्वादुं कृत्वा भुङ्क्ते' इति अर्थः । 'स्वादुमि णमुल्' (३.८.२६) इति सूत्रेण णमुल् । 'सम्पन्नलवणशब्दौ स्वादुपर्यायौ' इति कौमुदी ।

**२२. विग्रः/विखुः/विखः/विख्यः** - एतेषां रूपाणाम् आपाततः दर्शनात् तु अर्थस्य स्पष्टता कापि न भवति । नासिकाहीनः इति शब्दार्थः । 'विगता नासिका यस्य' इति विग्रहे 'प्रादिभ्यो धातुजस्य..' इति वार्तिकेन समासः । 'वेर्ग्रो वक्तव्यः' इति वार्तिकेन गादेशः । ततः 'विग्रः' इति रूपं

सिद्ध्यति । 'खयश्च' इति वार्तिकेन ख्यादेशे 'विख्यः' इत्यपि । 'खुखौ च' इति शाकटायनः । तस्मात् 'विखुः' 'विखः' इति रूपे । एतानि चत्वारि अपि गतनासिकमेव निर्दिशन्ति । 'विग्रस्तु गतनासिके' इति अमरः । 'विग्रो विखुविनासिकः' इति रभसः ।

२३. नगरकाकः – यः स्वार्थसम्पादनासक्तः, परवञ्चनानिपुणः भवति सः उच्यते 'नगरकाकः' इति । अथवा नगरस्य काकः क्वचिदपि अतिष्ठन् सर्वत्र यथा परिभ्रमति तथा अनवस्थितचित्तः कापुरुषः एवम् उच्यते । एवमेव 'नगरवायसः' 'नगरध्वाङ्क्षः' इत्यादयः अपि । 'तीर्थकाकः' इत्यादयः अपि एतत्सदृशाः एव । यः लुब्धः चपलस्वभावश्च भवति सः 'तीर्थकाकः' इति उच्यते ।

अत्रैव केचन रमणीयाः व्यावहारिकप्रयोगाः अपि उदाहृताः चेत् न भवेत् अनौचित्यम् । ते च केचन –

२४. सतृणम् अत्ति – तृणमपि अपरित्यज्य= साकल्येन खादति । पात्रे परिविष्टं सकलं भक्षयति इति तात्पर्यम् । तृणसहिततया खादति इति नार्थः । सहशब्दः (स) अत्र अपरिवर्जने वर्तते । न तु तृणसहभावे । तृणभक्षणे तात्पर्यं नास्ति अत्र ।



२५. संहृतपुच्छि – भीतः शुनकः पादयोः मध्ये पुच्छं निवेश्य धावति । तत्र प्रयुज्यते – 'संहृतपुच्छि श्वा धावति' इति । प्रक्रियासर्वस्वे वार्तिकम् – 'संहृतपुच्छ्येकपद्याढ्यपद्यादयः' (सू – ५.४.१५६)

२६. सुखसुखेन ददाति / प्रियप्रियेण ददाति – 'अतिप्रियमपि वस्तु अनायासेन ददाति' इत्यर्थः । (कौमुदी) [सू – 'अकृच्छ्रे क्रियसुखयोरन्यतरस्याम्' (८.१.१३)] 'कर्णः सुखसुखेन कवचं कुण्डलं च दत्तवान्' इत्यादीनि वाक्यानि अस्य उदाहरणानि भवितुम् अर्हन्ति ।

२७. सहपांशुकिलः – सह पांशुना किलति (क्रीडति) सह + पांशु + किल + कः (३.१.१३५) । आ बाल्यात् यः सखा स्यात् सः एतेन पदेन निर्दिश्यते । 'सहपांशुकिलः स्नेही वयस्यः' इति त्रिकाण्डकोषः ।

२८. उत्पुच्छयते – पुच्छम् उदस्यति । उत्साहं दर्शयति इत्यर्थः । (पुच्छादुदसने व्यसने पर्यसने च – वा) तथा हि प्रयोगः – 'दृष्ट्वैव दूरतो मित्रमत्रोत्पुच्छयते वटुः ।'

२९. उत्पत्योत्पत्य – आदरः सम्भ्रमातिशयः च यत्र द्योतते तत्र एतत् पदं प्रयुज्यते । तथा हि प्रयोगः – 'उत्पत्योत्पत्य सर्वेऽपि चित्रं द्रष्टुं समागताः ।'

एतादृशाः शब्दाः असङ्ख्याः सन्ति संस्कृतभाषायाम् । 'पण्डितपुत्रः' (मूर्खः) 'देवानां प्रियः' (अज्ञः) इत्यादयः शब्दाः अपि एतस्यामेव कोटौ अन्तर्भवन्ति ।

एते सर्वे शब्दाः पूर्वं जनैः प्रयुज्यमानाः आसन् । अतः तेषाम् अर्थः अपि प्रयोक्तॄणां श्रोतॄणां च स्फुटः आसीत् । किन्तु अद्यत्वे एतादृशानां पदानां प्रयोगस्य वैरल्यात् एतानि अस्मासु वैचित्र्यबुद्धिं जनयेयुः कदाचित् । अस्मादृशान् मनसि निधाय एव उक्तवान् स्यात् भर्तृहरिः – 'दैवी वागवकीर्णेयम् अशक्तैरभिधातृभिः' (वाक्यपदीयम् – १.१५४) इति । संस्कृतज्ञानाम् अस्माकम् अशक्तेः कारणतः कियन्तः शब्दाः दुरवगमाः जाताः स्युः, कियन्तः वा प्रयोगपथात् च्युताः स्युः इति तु भगवान् एव जानाति ।